॥ श्रीः ॥

# रागचंद्रिका ।

अयं ग्रंथः

मुम्बय्यां

## पं. विष्णुशर्मणा

निर्णयसागरयंत्रालये कोलभाटवीथ्यां २३ नं०

बा. रा. घाणेकरद्वारा मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतः ।

शके १८३३. सन १९११.

श्रीगणेशायनमः ।

# अथ रागचंद्रिकाप्रारभ्यते ।

नत्वा गजाननं सांबं श्रीरामं मारुतिं गुरून् ॥
रागाणां तत्वबोधाय प्रवक्ष्ये रागचंद्रिकाम् ॥ १ ॥

अथोद्देशः ॥

भैरवः प्रथमो रागस्ततो बंगालभैरवः ॥
आनंदभैरवश्चैव शिवभैरव एव च ॥ २ ॥
ततः प्रभातो रामक्रीर्गुणक्रीरप्यहीरिका ॥
योगिनी च विभासश्च ततः सौराष्ट्रको मतः ॥ ३ ॥
वेलावली पुनः शुक्ला यमनीपूर्विका तथा ॥
नटवेलावली देवगिरिश्चाह्लैयकस्तथा ॥ ४ ॥
सर्पर्दा देशकारश्च लच्छासागस्तथैव च ॥
ककुभश्चाथ माडश्च भैरवी सिंधुभैरवी ॥ ५ ॥
भूपालश्चैव सामंतस्तोडिका गुर्जरी तथा ॥
लाचारी च मुखारी चासावरी जौनपूरिका ॥ ६ ॥
देशी च देवगांधारः खटो देशाख्य एव च ॥
सुहा सुग्राइका मध्यमादिः सारंग एव च ॥ ७ ॥
वृंदावनी वृद्धहंसो गौडसारंगकस्तथा ॥
पटमंजर्यथ धनाश्रीश्च भीमपलाशिका ॥ ८ ॥
मूलतानी च पीलुश्च बर्वा मारुस्तथा पुनः ॥
मालीगौरो वराटी च जैत्रोऽथो मालवश्रिका ॥ ९ ॥
पूर्वी जैत्रश्रिका पूर्याधनाश्रीर्हंसकंकणी ॥
रेवा साजगिरी गौरी श्रीत्रिवेण्यौ च टंकिका ॥ १० ॥

A



मालवी दीपकश्चैते रागा दिवसवर्तिनः ॥
प्रोक्ताः षट्षष्टिसंख्याका अथ रात्रिगतान् ब्रुवे ॥ ११ ॥
यमनः शुद्धकल्याणो भूपाली च हमीरकः ॥
श्यामः कामोदको हेमश्चंद्रकांतो नटस्तथा ॥ १२ ॥
छायानाटश्च केदारो मल्हा चांदनी तथा ॥
विहंगश्च तथा प्रोक्तः प्रसिद्धः शंकरस्तथा ॥ १३ ॥
पूरिया च खमाजश्च तथा खंबावती स्मृता ॥
रागेश्वरी च दुर्गा च तिलंगश्च तथा पुनः ॥ १४ ॥
झिंझूटिका पहाडी च सोरटी देश एव च ॥
तथा जैजयवंती च कामोदस्तिलकादिकः ॥ १५ ॥
मल्लारो मेघमल्लारः सुरमल्लार एव च ॥
मीयामल्लारको गौडमल्लारः काफिका तथा ॥ १६ ॥
सिंधुरो धानिका नीलांबरी गारा तथैव च ॥
कर्णाटको नायकी च हुसेनी कौशिरेव च ॥ १७ ॥
अड्डाणकः सहाना च वागीश्वरीबहारकौ ॥
मालकौशिश्च हिंदोलो वसंतो भट्टिहारकः ॥ १८ ॥
भंखारः पंचमश्चैव परजः सोहनी तथा ॥
कलिंगश्चाथ ललितपंचमो ललितस्तथा ॥ १९ ॥
रागास्त्वेते रात्रिगेयाः षट्पंचाशत्समीरिताः ॥
अहोरात्रगतास्ते स्युर्द्वाविंशत्युत्तरं शतम् ॥ २० ॥

अथ लक्षणानि ॥

प्रथमो भैरवो रागो मृदुमर्षभधैवतः ॥
वादी धैवत एवाऽत्र संवादी चर्षभो मतः ॥ २१ ॥
यदि भैरवरागेऽस्मिन्निषादः परिवर्जितः ॥
गांधारस्य च वक्रत्वं भवेद्बंगालभैरवः ॥ २२ ॥
यदा भैरवमेलेऽस्मिन् भवेत्तीव्रस्तु धैवतः ॥
आनंदभैरवं सांशं संपूर्ण तं तदा विदुः ॥ २३ ॥

भैरवस्यावरोहे तु कोमलौ भवतो गनी ॥
शिवभैरवमाहुस्तं तदा गीतविशारदाः ॥ २४ ॥
अस्मिन् भैरवसंस्थाने प्रभातो वादिमध्यमः ॥
षड्जसंवाद्यनुगतो ललितांगेन गीयते ॥ २५ ॥
धवादिनी रिसंवादिन्यथो रिमधकोमला ॥
मनिसंवर्जिताऽऽरोहे प्रोक्ता रामकली बुधैः ॥ २६ ॥
गनिवर्ज्या गुणकली मृदुधैवतवादिनी ॥
कोमलर्षभसंवादिन्यौडुवा मृदुमध्यमा ॥ २७ ॥
पूर्वांगे भैरवो यस्यामुत्तरांगे हरिप्रिया ॥
विचित्ररूपिणी प्रातरहीरी गीयते बुधैः ॥ २८ ॥
गांधारहीना षड्जांशा मृदुधर्षभमध्यमा ॥
निषादरहिताऽऽरोहे योगिनी प्रातरेव हि ॥ २९ ॥
विभासो मनिहीनस्तु कोमलर्षभधैवतः ॥
धवाद्यृषभसंवादी गीयते प्रातरौडुवः ॥ ३० ॥
भैरवस्यैव संस्थाने धैवतद्वयसंयुतः ॥
समसंवादसंपूर्णः सौराष्ट्रो गीयते बुधैः ॥ ३१ ॥
वेलावली मान्यतीव्रा गसंवादिधवादिनी ॥
आरोहणेऽल्पमनिका प्रातरेव हि गीयते ॥ ३२ ॥
शुक्लवेलावली त्वत्र समसंवादिवादिनी ॥
किंचित्कोमलनिस्पर्शा प्रातर्गेया स्मृता बुधैः ॥ ३३ ॥
तीव्रमध्यमसंयुक्ता पसंवादिसवादिनी ॥
वेलावली तु यमनीपूर्विका कथिता प्रगे ॥ ३४ ॥
नटवेलावली चात्र समसंवादिवादिनी ॥
आरोहे नटसंमिश्रा प्रातरेव हि गीयते ॥ ३५ ॥
वेलावल्यास्तु संस्थाने कल्याणांगेन गीयते ॥
षड्जवादी देवगिरिर्विलोमे धगदुर्बलः ॥ ३६ ॥

वेलावलीसमुद्भूत आरोहे वर्ज्यमध्यमः ॥
अह्वया धगसंवादोऽवरोहे मृदुनिः क्वचित् ॥ ३७ ॥
वेलावलीस्वैररेव सर्पदा गीयते बुधैः ॥
षड्जपंचमसंवादी प्रातःकालोचितो हि सः ॥ ३८ ॥
देशीकारे मनी वर्ज्यौ वादिसंवादिनौ धगौ ॥
तीव्रास्तु रिधगाः प्रोक्ता गेयता प्रातरेव हि ॥ ३९ ॥
वेलावली तु खंमाजमिश्रिता यदि जायते ॥
धगसंवादतो लच्छासागः प्रातः समीरितः ॥ ४० ॥
जयवंती यदा वेलावल्यां संमिश्रिता भवेत् ॥
रिपसंवादिवादिभ्यां ककुभः प्रातरेव हि ॥ ४१ ॥
मान्यतीव्रस्वरः पूर्णः षड्जांशो वक्रचंक्रमः ॥
रिधदुर्बल आरोहे माडोऽयं सार्वकालिकः ॥ ४२ ॥
यत्र षड्जस्वरो वादी संवादी मध्यमः स्मृतः ॥
स्वैरिणी गीयते प्रातर्भैरवी सर्वकोमला ॥ ४३ ॥
यत्रर्षभस्तु तीव्रः स्यात्समौ संवादिवादिनौ ॥
सिंधुपूर्वा भैरवीयं प्रातर्गेयाऽन्यकोमला ॥ ४४ ॥
भूपालो भैरवीमेलेऽप्यौडुवो मनिवर्जितः ॥
धवादी च गसंवादी प्रातरेव हि गीयते ॥ ४५ ॥
गनिवर्जित आरोहेऽवरोहे तु निवर्जितः ॥
समसंवादिवादी च सामंतो भैरवीस्वरैः ॥ ४६ ॥
मनी तीव्रौ धगरयः कोमलाः स्युर्धगौ स्मृतौ ॥
वादिसंवादिनौ यत्र तोडी सा संगवे मता ॥ ४७ ॥
पंचमो वर्ज्यते यत्र वादिसंवादिनौ धरी ॥
संगवे गीयते तज्ज्ञैस्तोडी सा गुर्जरीरिता ॥ ४८ ॥
यदि तोडी कोमलेन मध्यमेन युता क्वचित् ॥
तदा वदंति तां सर्वे लाचारीमिति पंडिताः ॥ ४९ ॥

तोडीयं यदि तीव्रेण गांधारेण समन्विता ॥
प्रवदंति तदा त्वेनां मुखारीमिति गायकाः ॥ ५० ॥
मृदू गमौ धनी चैव तीव्रस्तु ऋषभो धगौ ॥
वादिसंवादिनौ यस्यां सासावर्यपि संगवे ॥ ५१ ॥
कोमला गमधनयो यस्यां सैव निवादिनी ॥
गसंवादिन्यभिमता जौनपूरी च संगवे ॥ ५२ ॥
आसावरीस्वरैर्युक्ताऽप्यारोहे गधवर्जिता ॥
देशी द्वितीययामेऽह्नि समसंवादभूषिता ॥ ५३ ॥
आसावरीमेलभवः सपसंवादशोभनः ॥
आरोहे रिधवर्ज्यस्तु देवगांधार इष्यते ॥ ५४ ॥
भैरवासावरीत्यादिरागैः षड्भिः सुमिश्रितः ॥
धैवतांशो गसंवादी खटः संगव ईरितः ॥ ५५ ॥
हरिप्रियामेलभवो देशाख्यो धगदुर्बलः ॥
षड्जवादी मसंवादी सारंगांगेन गीयते ॥ ५६ ॥
कोमलाः स्युर्गमनयः समौ संवादिवादिनौ ॥
तीव्रर्षभो धहीनस्तु सूहा कुतुप इष्यते ॥ ५७ ॥
कोमलाः स्युर्गमनयः सपौ संवादिवादिनौ ॥
नारोहे धस्तीव्ररिधा सुघ्राई कुतुपे स्मृता ॥ ५८ ॥
तीव्रर्षभा मृदुमनिर्धगवर्ज्या रिवादिनी ॥
संवादिपंचमा प्रोक्ता मध्याह्ने मध्यमावती ॥ ५९ ॥
गवर्ज्यः कोमलमनिः सारंगस्तीव्रधर्षभः ॥
परिसंवादिवादी च मध्याह्ने गीयते बुधैः ॥ ६० ॥
यदा तीव्रो निषादः स्यादारोहे न च धैवतः ॥
तदा सारंग एवायं वृंदावन्यभिधीयते ॥ ६१ ॥
गवर्जितो मृदुमनिः सारंगसदृशोऽल्पधः ॥
पवादी षड्जसंवादी मध्याह्ने बडहंसकः ॥ ६२ ॥

तीव्रौ रिगौ धनी यत्र मध्यमौ द्वौ समीरितौ ॥
वक्रोऽसौ गौडसारंगो गांशः संवादिधैवतः ॥ ६३ ॥
कोमला निगमा यत्र प्रारोहे दुर्बलौ धगौ ॥
षड्जपंचमसंवादाऽपराह्णे पटमंजरी ॥ ६४ ॥
कोमलाः स्युः स्वराः सर्वे वादिसंवादिनौ पसौ ॥
नारोहणे रिधौ यत्र साऽपराह्णे धनाश्रिका ॥ ६५ ॥
मनी तु कोमलौ गोऽपि समौ संवादिवादिनौ ॥
आरोहे न रिधौ साऽपराह्णे भीमपलाशिका ॥ ६६ ॥
कोमला रिधगा यत्र वादिसंवादिनौ पसौ ॥
आरोहे रिधहीना सा मूलतान्यपराह्णगा ॥ ६७ ॥
द्विगा मृदुनिमा चैव प्रारोहे रिधवर्जिता ॥
षड्जपंचमसंवादाऽपराह्णे हंसकंकणी ॥ ६८ ॥
सर्वे स्युः कोमलास्तीव्रा वादी तु मृदुगो मतः ॥
संवादी यत्र निस्तीव्रः पीलूरागः स सर्वदा ॥ ६९ ॥
द्विगो द्विधो द्विनिः पूर्णो मृदुमस्तीव्ररिस्तथा ॥
परिसंवादिवादिभ्यां बर्वारागः सदा मतः ॥ ७० ॥
तीव्रौ गमौ धनी चैव मृदू रिधैवतर्षभौ ॥
संवादिवादिनौ यत्र स मारुः सायमीरितः ॥ ७१ ॥
मारुमेलसमुद्भूतः संपूर्ण ऋषभांशकः ॥
मंद्रमध्यस्वरैः सायं मालीगौरोऽभिगीयते ॥ ७२ ॥
वराटी मारुसंस्थाने धसंवादिगवादिनी ॥
पंचमेन युता पूर्णा गीयते सायमेव हि ॥ ७३ ॥
मारुसंस्थानसंभूतश्चौडुवो मनिवर्जितः ॥
पवादी षड्जसंवादी सायं जैत्रोऽभिगीयते ॥ ७४ ॥
तीव्रा गमनयो यत्र वादिसंवादिनौ पसौ ॥
वर्जितर्षभधा सायं मालवश्रीः प्रकीर्तिता ॥ ७५ ॥

मृदू रिधौ मध्यमौ द्वौ वादिसंवादिनौ गनी ॥
पूर्वीरागः सायमुक्तः पूर्णारोहावरोहणः ॥ ७६ ॥
मध्यमेन विहीना तु त्रिवेणी रिधकोमला ॥
श्र्यंगेन गीयते सायं परिसंवादिवादिनी ॥ ७७ ॥
त्रिवेणीसदृशी टंकी महीना रिधकोमला ॥
श्र्यंगेन गीयते सायं रिपसंवादिवादिनी ॥ ७८ ॥
पूर्वीमेलसमुद्भूता गांशा साजगिरिर्मता ॥
द्विधैवता च संपूर्णा क्वचित्कोमलमध्यमा ॥ ७९ ॥
पूर्वीमेलसमुत्पन्ना प्रारोहे निविवर्जिता ॥
रिपसंवादसंपन्ना मालवी सायमीरिता ॥ ८० ॥
मनिहीना तु रेवा स्यात् कोमलर्षभधैवता ॥
गांशा कैश्चित्तु षड्जांशा गीयते सायमेव हि ॥ ८१ ॥
पूर्वीमेलसमुत्पन्ना प्रारोहे रिधवर्जिता ॥
गांधारांशा सायमियं जैत्रश्रीर्गीयते बुधैः ॥ ८२ ॥
तीव्रास्तु निगमा यस्यां कोमलौ धैवतर्षभौ ॥
पांशा संवादिऋषभा सायं पूर्याधनाश्रिका ॥ ८३ ॥
यत्र तीव्रा गमनयो वादिसंवादिनौ परी ॥
आरोहे न गधौ सायं श्रीरागो गीयते बुधैः ॥ ८४ ॥
यस्यां गमनयस्तीव्रा वादिसंवादिनौ रिपौ ॥
गौरी श्रीसदृशी पूर्णा सायंकालेऽभिगीयते ॥ ८५ ॥
पूर्वीमेलसमुत्पन्न आरोहे वर्जितर्षभः ॥
अवरोहे निर्निषादः सांशः सायं हि दीपकः ॥ ८६ ॥

**गतं दिनमथो रात्रिः ॥**

यत्र सर्वे स्वरास्तीव्रा वादिसंवादिनौ गनी ॥
निशामुखे तु यमनः क्वचित्कोमलमध्यमः ॥ ८७ ॥
आरोहे मनिहीनस्तु शुद्धस्तीव्रस्वरैर्युतः ॥
गांशो धैवतसंवादी प्रथमे प्रहरे निशि ॥ ८८ ॥

आरोहे चावरोहे च भूपाली मनिवर्जिता ॥
गांशा धैवतसंवादिन्युक्ता तीव्रस्वरैर्निशि ॥ ८९ ॥
द्विमस्तीव्रेतरो धांश आरोहे स्वल्पपंचमः ॥
गसंवादी गवक्रश्च हंमीरो निशि गीयते ॥ ९० ॥
द्विमस्तीव्रेतरः श्याम आरोहे वर्ज्यधैवतः ॥
षड्वादी मसंवादी रात्र्याद्यप्रहरे मतः ॥ ९१ ॥
द्विमध्यमश्चान्यतीव्रो गवक्रोऽल्पनिषादकः ॥
पांशश्चर्षभसंवादी कामोदो निशि गीयते ॥ ९२ ॥
मान्यतीव्रस्वरोपेतः प्रारोहे वर्ज्यधैवतः ॥
संपूर्णः षड्वादी च हेमः कल्याण उच्यते ॥ ९३ ॥
सर्वतीव्रस्वरोपेतः प्रारोहे वर्ज्यमध्यमः ॥
गनिसंवादसंयुक्तश्चंद्रकांतो भवेन्निशि ॥ ९४ ॥
मो मृदुस्त्वितरे तीव्राः समौ संवादिवादिनौ ॥
अवरोहे धगौ वर्ज्यौ नटोऽसौ निशि गीयते ॥ ९५ ॥
द्विमस्तीव्रेतरः पांशो रिसंवादी गवक्रकः ॥
निषादहीन आरोहे छायानाटो निशि स्मृतः ॥ ९६ ॥
द्विमस्तीव्रान्यको मांश आरोहे रिगवर्जितः ॥
क्वचित्कोमलनिर्यामे केदारः प्रथमे निशि ॥ ९७ ॥
केदारस्यैव भेदोऽयं श्यामकामोदसंयुतः ॥
आरोहे रिधवर्ज्यस्तु मलुहा गीयते निशि ॥ ९८ ॥
यदा केदाररागेऽस्मिन् बहुलस्तीव्रमध्यमः ॥
स्तोकं मृदुनिषादश्च चांदनीत्यभिधीयते ॥ ९९ ॥
मृदुरिरितरे तीव्रा वादिसंवादिनौ गनी ॥
पवर्जिता पूर्वयामे गीयते निशि पूरिया ॥ १०० ॥
मृदुमो निद्वयो गांशो निसंवादी खमाजकः ॥
नारोहे ऋषभो यामे द्वितीये निशि गीयते ॥ १०१ ॥

खमाजमेले खंवावत्यवरोहे रिवर्जिता ॥
मात्सं स्पृशति गांशैव पवक्रा ह्यवरोहणे ॥ १०२ ॥
रागेश्वरी मृदुमनिर्मांशा पंचमवर्जिता ॥
नरिरारोहणेऽन्यस्मिन्धवक्रा गीयते निशि ॥ १०३ ॥
रिपहीना मृदुमनिर्निसंवादिगवादिनी ॥
औडुवा गीयते दुर्गा नक्तं यामे द्वितीयके ॥ १०४ ॥
रिधहीना मृदुमनिर्निसंवादिगवादिनी ॥
तिलंगिकाप्यौडुवा स्याद्द्वितीयप्रहरे निशि ॥ १०५ ॥
द्विगो द्विनिश्च मृदुमो गांशः संवादिधैवतः ॥
आरोहेऽल्पनिगो नक्तं झिंझूटीराग इष्यते ॥ १०६ ॥
मान्यतीव्रा च मन्यल्पा सांशा संवादिपंचमा ॥
मंद्रमध्यस्वरैर्नित्यं पहाडी सार्वकालिका ॥ १०७ ॥
मृदुमा द्विनिषादा च धरिसंवादिवादिनी ॥
वर्ज्यगांधारधाऽऽरोहे सोरटी निशि गीयते ॥ १०८ ॥
पांशो रिषभसंवादी सोरटीतुल्यरूपकः ॥
रिवक्रो देसरागश्च द्वितीयप्रहरे निशि ॥ १०९ ॥
द्विनिषादा द्विगांधारा न्यंशा संवादिपंचमा ॥
सोरठ्यंगत एवैषा निशि जैजयवंतिका ॥ ११० ॥
सांशः पंचमसंवादी रिवक्रः सोरटीसदृक् ॥
आरोहे वर्ज्यधो रात्रौ कामोदस्तिलकादिकः ॥ १११ ॥
तीव्रौ रिधौ मृदुर्मश्च सांशः संवादिपंचमः ॥
गनिहीनस्तु मल्लारो वर्षतौ गीयते सदा ॥ ११२ ॥
निषादयोर्द्वयोश्चापि मल्लारेऽस्मिन्प्रवेशतः ॥
ऋषभस्यांदोलनाच्च मेघमल्लार उच्यते ॥ ११३ ॥
सारंगसदृशः प्रायः सुरमल्लार उच्यते ॥
कर्णाटसदृशो लक्ष्ये मीयामल्लार इष्यते ॥ ११४ ॥

मान्यतीव्रस्वरः पूर्णो मांशः संवादिषड्जकः ॥
आरोहेऽल्पनिषादश्च गौडमल्लार उच्यते ॥ ११५ ॥
मृदू गमौ रिधौ तीव्रावुभौ नी पंचमोंऽशकः ॥
यत्र षड्जस्तु संवादी काफी सा निशि गीयते ॥ ११६ ॥
कोमलाः स्युर्गमनय आरोहे गनिवर्जनम् ॥
षड्जपंचमसंवादः सिंधुरो गीयते निशि ॥ ११७ ॥
कोमलाः स्युर्गमनयो वादिसंवादिनौ गनी ॥
वर्जितौ धर्षभौ यत्र धानी सा गीयते सदा ॥ ११८ ॥
कोमलौ तु मनी गौ द्वौ सपौ संवादिवादिनौ ॥
आरोहे धैवतो वर्ज्यः सोक्ता नीलांबरी सदा ॥ ११९ ॥
द्विगो द्विनिस्तीव्ररिधः षड्जांशो मृदुमध्यमः ॥
गारारागो मतः पूर्णो निशि यामे द्वितीयके ॥ १२० ॥
मृदू गनी धमौ रिस्तु तीव्रोंऽशः पसहायकः ॥
गांधारांदोलनं यत्र कर्णाटः स निशि स्मृतः ॥ १२१ ॥
मृदवः स्युर्गमनयः समौ संवादिवादिनौ ॥
धैवतो वर्ज्यते यत्र कर्णाटो नायकी मतः ॥ १२२ ॥
मध्यमोद्ग्राहसंयुक्तस्तारषड्जांशको यदा ॥
कर्णाटो विशिखैरत्र हुसेनीत्यभिधीयते ॥ १२३ ॥
कर्णाटकस्यैव भेदः संपूर्णो मध्यमांशकः ॥
मालकौशिकसंमिश्रः कौशीत्यभिमतो निशि ॥ १२४ ॥
कोमला निगमास्तीव्रौ रिधावंशस्तुतारसः ॥
पसंवादी मतोऽड्डाण आरोहे धगदुर्बलः ॥ १२५ ॥
निगमा मृदवस्तीव्रौ रिधौ पांशः सहायसः ॥
आरोहे धविहीनश्च सहानार्धनिशि प्रियः ॥ १२६ ॥
कोमलाः स्युर्गमनयो वादिसंवादिनौ मसौ ॥
तीव्रौ रिधावर्धरात्रे गीता वागीश्वरी बुधैः ॥ १२७ ॥

निगमाः कोमला यत्र समौ संवादिवादिनौ ॥
नावरोहे धैवतोऽसौ बहारः स्याद्वसंतके ॥ १२८ ॥
मृदुर्म इतरे तीव्रा वादिसंवादिनौ गनी ॥
आरोहे रिधहीनोऽयं विहंगस्तु निशीथगः ॥ १२९ ॥
तीव्रस्वरः षाडवश्च वादिसंवादिनौ गनी ॥
मध्यमेन विहीनोऽसौ शंकरोऽपि निशीथगः ॥ १३० ॥
मृदू गमौ धनी चैव सभौ संवादिवादिनौ ॥
परिहीनो मालकौशिर्निशीथात्परमौडुवः ॥ १३१ ॥
रिपहीनः सर्वतीव्रो गांशः संवादिधैवतः ॥
हिंदोल औडुवो नित्यं वसंते गीयते बुधैः ॥ १३२ ॥
मृदू रिरितरे ती: [illegible] ज्यश्च द्विमध्यमः ॥
षड्वादी पसंवादी [illegible] तौ वसंतकः ॥ १३३ ॥
मांशः कलिंगपरजललितैर्मिश्रितस्त्रिभिः ॥
संपूर्णो भट्टिहारश्च तृतीयप्रहरे निशि ॥ १३४ ॥
वसंतमेले भंखारः संपूर्णो मृदुलर्षभः ॥
द्विमध्यमः पंचमांशस्तृतीयप्रहरे निशि ॥ १३५
वसंतस्वरसंयुक्त आरोहे वर्जितर्षभः ॥
पंचमः समसंवादश्चतुर्थप्रहरे निशि ॥ १३६ ॥
मृदू रिधौ गनी तीव्रौ वादिसंवादिनौ सपौ ॥
मध्यमद्वयसंयुक्तः परजोऽपररात्रगः ॥ १३७ ॥
मृदू रिरितरे तीव्रा वादिसंवादिनौ धगौ ॥
द्विमध्यमा पवर्ज्या च सोहन्यपररात्रगा ॥ १३८ ॥
कोमला रिमधास्तीव्रौ गनी संवादिधैवतः ॥
गांशो रात्रावंत्ययामे कलिंगो गीयते बुधैः ॥ १३९ ॥
अवरोहे पंचमः स्याद्धैवतः कोमलो यदि ॥
तदा ललितमेवामुं जगुर्ललितपंचमम् ॥ १४० ॥

मृदू रिर्निधगास्तीव्रा मद्वयं पंचमो नहि ॥
समसंवादिवादी च गीतांते ललितः शुभः ॥ १४१ ॥
द्वाविंशत्युत्तरशतं रागाः संक्षेपतो मया ॥
तीव्रकोमलवाद्यादिस्वरैरेवं प्रकीर्तिताः ॥ १४२ ॥
अत्र प्रकटितै रागैर्नित्यं सप्रेमसुस्वरम् ॥
गायेद्यः श्रीरामगुणान् स सर्वेप्सितमाप्नुयात् ॥ १४३ ॥

श्रीरामचंद्रार्पणमस्तु ॥

